# Jatibadhak Parishkar

AND

## JATILAKSHAN PARISHKAR

COMPILED BY

Shrotriy Naiyaik Shri LOKA NATH SHARMA.

*VILLAGE GANGAULI.*

# जातिबाधक परिष्कारः ।

## जातिलक्षण परिष्कारश्च ।

गङ्गौलीग्रामनिवासिश्रोत्रिय नैयायिक

श्रीलोकनाथशर्म्मकृतः ।

काश्याम्

अमर यन्त्रालये मुद्रितः ।

सन् १९०० । शकः १८२२ ।

जयमहावीर ॥

# जातिवाधक परिष्कारः ॥

---

प्रणम्यगुर्वङ्घ्रिसरोजयुग्मं पादारविन्दंजनकात्मजायाः ॥ परिष्कृतिंजातकवाधकस्य श्रीलोकनाथः प्रकरोति काश्याम् ॥ १ ॥ व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः । रूपहानिरसम्बन्धोजातिबाधकसङ्ग्रहः । इतिद्रव्यकिरणावल्यामुक्तमुदयनाचार्यैः । व्यक्तेरभेदइति, यस्यव्यक्तेरभेदस्तस्यनजातित्वमितिभावः । व्यक्तेः, स्वाधिकरणस्य, निष्ठत्वंषष्ठ्यर्थः, अभेदः, एकत्वं, तच्चनिष्ठत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताभिन्ननिरूपकतात्व निष्ठावच्छेदकताभिन्नावच्छेदकत्वा निरूपितनिरूपकतानिष्ठावच्छेदकताभिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वा निरूपिताधिकरणतानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताश्रयनिष्ठावच्छेदकताभिन्नवृत्तितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितवृत्तिता निष्ठावच्छेदकताभिन्नप्रतियोगितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगितानिष्ठावच्छेदकताभिन्नभेदत्वनिष्ठावच्छेदकता भिन्नावच्छेदकत्वानिरूपिता या वैशिष्ट्यानवच्छिन्नस्वनिष्ठावच्छे

दकदकतानिरूपितनिरूपकता निष्ठावच्छेदकतानिरूपिता धिकरणतानिष्ठावच्छेदकता निरूपिताश्रयनिष्ठावच्छेदकतानिरूपितवृत्तितानिष्ठावच्छेदकता निरूपितप्रतियोगिता निष्ठावच्छेदकता निरूपितभेदत्वनिष्ठावच्छेदकतानिरूपिता, प्रतियोगिता, तन्निरूपकाभावरूपं, भेदश्चव्यासज्यवृत्तिधर्म्माद्यनवच्छिन्न प्रतियोगिताकोबाध्यस्तेन गगनघटोभयभेदादेर्गगनेसत्वेपिनक्षतिः ॥ तथाचस्वाश्रयनिष्ठतावृत्त्याभावः स्वस्मिन् जातित्वबाधकइतितस्यार्थः । एकमात्रवृत्तित्वं जातित्वाभावानुमापकमितिफलितार्थः । अनुमानंयथा गगनत्वंनजातिः एकमात्रवृत्तित्वात्, रूपत्वादिति, एकमात्रवृत्तित्वञ्चवस्तुविशिष्टत्वं, वैशिष्ट्यञ्चस्ववृत्तित्वस्वभिन्नावृत्तित्वोभयसम्बन्धेनेति, । अथवाभेदविशिष्टान्यत्वंतत्, वैशिष्ट्यञ्चस्वप्रतियोगितासामानाधिकरण्यस्व सामानाधिकरण्योभयसम्बन्धेन, गगनघटोभयभेदमादायगगनत्वेभेदविशिष्टत्ववारणाय भेदेप्रतियोगिताविशिष्टत्वस्यनिवेशः, वैशिष्ट्यञ्चस्वनिरूपकत्वस्वाधिकरणावृत्तित्वोभयसम्बन्धेन, गगनघटोभयभेदेस्वप्रतियोगिताया द्वितीयसम्बन्धविरहान्नतमादायदोषः, । अथवा एकत्ववृत्तिप्रतियोगिताकत्वस्यभेदेनिवेशः, वृत्तित्वञ्चस्वावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपकपर्य्याप्त्यनुयोगितावच्छेदकत्व स्वनिरूपकानुयोगितानिरूपितानिरूपकतावच्छेदकता त्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन, स्वंप्रतियोगिता, गगनघटोभयभेदीय प्रतियोगितायाउक्तोभयसम्बन्धेनैकत्व

वृत्तित्वविरहान्नदोषः, घटत्वेनगगनभेदीयप्रतियोगितायाश्चाद्यसंसर्गोघटत्वगतैकत्वे, द्वितीयसंसर्गस्तुगगनत्वगतैकत्वे, इतितस्या अप्युक्तोभयसंसर्गेणैकत्ववृत्तित्व विरहान्नतद्भेदमादायापिदोषः, ॥ तुल्यत्वमिति, तच्चतुल्यव्यक्तिवृत्तित्वं, अन्यूनानतिरिक्ताश्रयकत्वमितियावत्, जातिविशिष्टत्वंमिति फलितार्थः, वैशिष्ट्यञ्चस्वभिन्नत्वस्व व्यापकत्वस्वव्याप्यत्वैतत्त्रितयसम्बन्धेन, स्वव्याप्यत्वञ्चस्वाभाववदवृत्तित्वं, स्वव्यापकत्वञ्च स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वं, घटत्वंकलसत्वंनविभिन्नंसामान्य, मन्यथाघटत्वस्योक्तसंसर्गेणकलसत्वविशिष्टत्वेन, कलसत्वस्योक्तसम्बन्धेनघटत्वविशिष्टत्वेनैकस्यापिजातित्वंनस्यात्, विभिन्नजातिकल्पनायाञ्चघटपदशक्यतावच्छेदकता घटत्वस्य, उत कलसत्वादेः, एकशेषस्यकर्त्तुमशक्यत्वा, दितिविनिगमनाविरहेण सर्वेषां शक्यतावच्छेदकत्वेनघटपदस्यनानार्थत्वंस्यात्, अनेकशक्यतावच्छेदककल्पनयागौरवञ्चस्या, दितिभावः, अनुमानप्रकारश्चघटत्वंनकलसत्वभिन्नंघटेतरासमवेतजातित्वात्, यन्नैवंतन्नैवंयथाद्रव्यत्वमिति, अथवा घटत्वमुक्तत्रितयसंसर्गेणजातिविशिष्टत्वाभाववत्, गुणभिन्नत्वेसतिसमवेतत्वात्, क्रियावदिति ॥ सङ्करइति, ननुकिंजातित्वबाधकंसाङ्कर्य्यं, नतावत् परस्परात्यन्ताभावसमानाधिकरणत्वे सत्येकाधिकरणवृत्तित्वं, परस्परत्वस्याननुगतस्यदुर्वचत्वात्, अथजातिविशिष्टत्वमेवतत्, वैशिष्ट्यञ्चस्वसामानाधिकरण्यस्वाभावसामानाधिकरण्य स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वै तत्त्रितय

सम्बन्धेन, पृथिवीत्वेघटजलगतद्वित्वनिरूपितसाङ्कर्य्यवार णाय वस्तुविशिष्टत्वमपहायजातिविशिष्टत्वमुपात्तं, स्वसामा नाधिकरण्यञ्च समवायसम्बन्धावच्छिन्नस्वनिष्ठनिरूपकता निरूपिताधिकरणतावन्निरूपितसमवाय स्वरूपातिरिक्तसम्ब न्धानवच्छिन्नवृत्तित्वं, कालिकसम्बन्धेनघटत्वाधिकरणेपटे पटत्वस्यवृत्तित्वेन घटत्वनिरूपितसाङ्कर्य्यस्यादतोनिरूपकता यांसमवायसम्बन्धावच्छिन्नत्वनिवेशः, कालिकेनघटत्वसमा नाधिकरणपटत्वेघटत्व निरूपितसाङ्कर्य्यवारणायवृत्तितायां समवायस्वरूपातिरिक्तसम्बन्धानवच्छिन्नत्वनिवेशः, समवा यसम्बन्धावच्छिन्नत्वनिवेशेभूतत्वंनजातिः मूर्त्तत्वनिरूपित साङ्कर्य्यादित्यनुमाने भूतेतरासमवेतत्वेसति भूतनिष्ठभेदप्र तियोगितानिरूपितसमवायसंसर्गा वच्छिन्नावच्छेदकत्वाभा वरूपपक्षतावच्छेदकाश्रयेघटभेदेहेत्व भावेनस्वमतेस्वरूपासि द्धिःस्यात्, स्वरूपसम्बन्धावच्छिन्नत्वनिवेशेभूतत्वजातित्व मतेस्वरूपासिद्धिःस्यादत, स्तथानिवेशः, । स्वाभाव सामानाधिकरण्यञ्चस्वनिष्ठसावच्छिन्नावच्छेदकत्वा निरू पितसमवायसम्बन्धावच्छिन्नप्रतियोगिता काभावनिष्ठस्वरू पसम्बन्धावच्छिन्न निरूपकताकाधिकरणतावन्निरूपितस मवायस्वरूपातिरिक्तसम्बन्धानवच्छिन्नवृत्तित्वं, घटवृत्ति त्वविशिष्टद्रव्यत्वाद्यभावमादायपृथिवीत्वे द्रव्यत्वनिरूपित साङ्कर्य्यवारणायप्रतियोगितायां सावच्छिन्नावच्छेदकत्वा निरूपितत्वनिवेशः, संयोगादिव्यधिकरणसम्बन्धावच्छिन्न प्रतियोगिताकद्रव्यत्वा भावमादायोक्तदोषवारणायप्रतियो

गितायां समवायसम्बन्धावच्छिन्नत्वनिवेशः, कालिकेनद्रव्यत्वाभावाधिकरणेघटेवृत्तौ घटत्वेद्रव्यत्वनिरूपितसाङ्कर्यवारणायनिरूपकतायां स्वरूपसम्बन्धावच्छिन्नत्वनिवेशः, द्रव्यत्वाभाववतिकर्मणिकालिकेनवृत्तौघटत्वेउक्तदोषवारणायवृत्तितायां समवायस्वरूपातिरिक्तसम्बन्धानवच्छिन्नत्वनिवेशः, वृत्तितायांसमवायसम्बन्धावच्छिन्नत्वनिवेशेउक्तानुमानेउक्तपक्षतावच्छेदकाश्रये घटभेदेहेत्वभावेनस्वमतेस्वरूपासिद्धिः स्यात्, स्वरूपसम्बन्धावच्छिन्नत्वनिवेशेपरमते स्वरूपासिद्धिःस्या, दतस्तथानिवेशः, । स्वसमानाधिकरणाभावप्रतियोगित्वञ्च स्वनिष्ठसमवायसम्बन्धावच्छिन्ननिरूपकताकाधिकरण तावन्निरूपितस्वरूपसंसर्गावच्छिन्नवृत्तितावदभावीय सावच्छिन्नावच्छेदकत्वानिरूपितसमवायसम्बन्धावच्छिन्नप्रतियोगित्वं, कालिकेनघटत्वाधिकरणजलवृत्ति पृथिवीत्वाभावप्रतियोगिपृथिवीत्वेघटत्वनिरूपितसाङ्कर्यवारणायनिरूपकतायां समवायसम्बन्धावच्छिन्नत्वनिवेशः, कालिकेनघटत्वसमानाधिकरणपृथिवीत्वाभावप्रतियोगिपृथिवीत्वे उक्तदोषवारणायवृत्तितायांस्वरूपसम्बन्धावच्छिन्नत्वनिवेशः, घटत्वसमानाधिकरणपटवृत्तित्वविशिष्टद्रव्यत्वाभावप्रतियोगिद्रव्यत्वे उक्तदोषवारणायप्रतियोगितायां सावच्छिन्नावच्छेदकत्वानिरूपितत्वनिवेशः, घटत्वसमानाधिकरणसंयोगसम्बन्धावच्छिन्न प्रतियोगिताकद्रव्यत्वाभावप्रतियोगिद्रव्यत्वे उक्तदोषवारणायप्रतियोगितायां समवायसम्बन्धावच्छिन्नत्वनिवेशः, इतिचेन्न भूतत्वमूर्त्तत्वोभयं

नजातिरितिप्राचीनमते भूतत्वेजातिविशिष्टत्वरूपसाङ्कर्य्यास म्भवादिति, ॥ अत्रोच्यते, वस्तुविशिष्टत्वमेवसाङ्कर्य्यं, वैशि ष्ठ्यश्चस्वाभावाधिकरणविशिष्टत्वस्य विशिष्टाधिकरणवृत्त्यभा वप्रतियोगित्वस्वविशिष्टाधिकरण विशिष्टत्वस्य निष्ठाभावप्र तियोगित्वाभावैतच्चतुष्टयसम्बन्धेन, घटत्वेपृथिवीत्वनिरू पितसाङ्कर्य्यवारणायाद्यसम्बन्धनिवेशः, तत्रवैशिष्ठ्यश्चस्वा भाववत्त्वसम्बन्धेन, अभावीयप्रतियोगितावच्छेदकसम्बन्ध श्चस्वानिष्ठाभावीय सावच्छिन्नावच्छेदकत्वानिरूपितसमवा यसम्बन्धावच्छिन्न प्रतियोगित्वविशिष्टसमवायसम्बन्धाव च्छिन्नवृत्तित्वं, प्रतियोगितायां सावच्छिन्नावच्छेदकत्वानि रूपितत्वानिवेशेउक्तानुमानेपरमते स्वरूपासिद्धिः स्यात्, मूर्त्तत्वाभावाधिकरणगगनस्य स्वनिष्ठघटवृत्तित्वविशिष्टभूत त्वाभावीयप्रतियोगित्वविशिष्टसमवायसम्बन्धावच्छिन्नवृत्ति त्वसम्बन्धेनभूतत्वेसत्वा,दतस्तन्निवेशः, मूर्त्तत्वाभावाधिकर णगगनस्य स्वनिष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगि त्वविशिष्टसमवायसम्बन्धावच्छिन्नवृत्तित्वसम्बन्धेन परमते भूतत्वेसत्वेनोक्तदोषःस्यादतः प्रतियोगितायांसमवायसम्ब न्धावच्छिन्नत्वनिवेशः, समवायसम्बन्धावच्छिन्नवृत्तित्वानि वेशे उक्तानुमानेस्वमतेस्वरूपासिद्धिः स्यात्, मूर्त्तत्वाभावाधि करणगगनस्य स्वनिष्ठाभावीयतादृशप्रतियोगित्वसम्बन्धेनो क्तपक्षतावच्छेदकाश्रयघटभेदेसत्वादतस्तन्निवेशः, स्वाभा वाधिकरणेत्यत्रस्वाभावश्च सावच्छिन्नावच्छेदकत्वानिरूपि तसमवायसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकोबोध्यः, पृ

थिवीत्वनिष्ठप्रतियोगिताकपटवृत्तित्व विशिष्टपृथिवीत्वाभावाधिकरणघटविशिष्टघटत्वेपृथिवीत्व निरूपितसाङ्कर्यवारणायप्रतियोगितायां सावच्छिन्नावच्छेदकत्वानिरूपितत्व निवेशः, संयोगसम्बन्धावच्छिन्नप्रतियोगिताकपृथिवीत्वाभावाधिकरणघटाविशिष्टघटत्वे उक्तदोषवारणायप्रतियोगितायां समवायसम्बन्धावच्छिन्नत्वनिवेशः, । पृथिवीत्वे घटत्वनिरूपितसाङ्कर्यवारणाय द्वितीयसम्बन्धनिवेशः, तत्रवैशिष्ट्यश्चाधेयतासम्बन्धेन, आधेयताचस्वाभाववत्वसम्बन्धेन, अभावीयप्रतियोगितावच्छेदकसम्बन्धश्चस्वनिष्ठाभावीयसावच्छिन्नावच्छेदकत्वा निरूपितसमवायसम्बन्धावच्छिन्नप्रतियोगित्व विशिष्टसमवायसम्बन्धावच्छिन्नवृत्तित्वं, प्रतियोगितायां सावच्छिन्नावच्छेदकत्वानिरूपितत्वा निवेशेउक्तानुमानेपरमतेमूर्त्तत्वाधिकरणमनसः स्वनिष्ठघटवृत्तित्वविशिष्टमूर्त्तत्वाभावीय प्रतियोगित्वविशिष्टसमवायसम्बन्धावच्छिन्नवृत्तित्वसम्बन्धेन मूर्त्तत्वेसत्वेनोक्तसम्बन्धेनस्वविशिष्टाधिकरणाप्रसिद्ध्याहेत्वसिद्धिः स्यादतस्तन्निवेशः, मूर्त्तत्वाधिकरणमनसः स्वनिष्ठसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकमूर्त्तत्वाभाव प्रतियोगित्वविशिष्टसमवायसम्बन्धावच्छिन्नवृत्तित्वसम्बन्धेन मूर्त्तत्वेसत्वेनोक्तसम्बन्धेनस्वविशिष्टाधिकरणाप्रसिद्ध्योक्तदोषःस्या, दतःसमवायसम्बन्धावच्छिन्नत्वनिवेशः, प्रतियोगितायांसमवायसम्बन्धावच्छिन्नवृत्तित्वानिवेशेउक्तानुमानेमूर्त्तत्वस्य मूर्तेतरासमवेतत्वेसति मूर्त्तनिष्ठभेदप्रतियोगितानिरूपितसमवायसम्बन्धा

वच्छिन्नावच्छेदकत्वाभाववत्वेन हेतौप्रविष्टतयास्वमतेहेत्व
सिद्धिः स्यात्, तादृशावच्छेदकत्वाभावाधिकरणघटभेदाधि
करणमनसः स्वनिष्ठाभावीयतादृशप्रतियोगित्व सम्बन्धेनघ
टभेदेसत्वेनोक्तसम्बन्धेन स्वविशिष्टाधिकरणाप्रसिद्धेः, एत
स्सन्निवेशः, स्वविशिष्टाधिकरणनिष्ठाभाव प्रतियोगित्व
ञ्च सावच्छिन्नावच्छेदकत्वानिरूपितसमवायसम्बन्धाव
च्छिन्नंबोध्यं, घटत्वसमानाधिकरणपटवृत्तित्व विशिष्टपृ
थिवीत्वाभावप्रतियोगिपृथिवीत्वे घटत्वनिरूपितसाङ्कर्य्य
वारणायप्रतियोगितायां सावच्छिन्नावच्छेदकत्वानिरूपि
त्वनिवेशः, घटत्वसमानाधिकरणसंयोग सम्बन्धावच्छिन्न
प्रतियोगिताकपृथिवीत्वाभाव प्रतियोगिपृथिवीत्वे उक्तदो
षवारणाय प्रतियोगितायांसमवायसम्बन्धावच्छिन्नत्वनिवे
शः, । घटत्वेपटत्वनिरूपितसाङ्कर्य्यवारणाय तृतीयस
म्बन्धनिवेशः, तत्राद्यवैशिष्ट्यञ्चाधेयतासम्बन्धेन, आधेय
ताचस्वाभाववत्वसम्बन्धेन, अभावीयप्रतियोगितावच्छेदक
सम्बन्धश्च स्वनिष्ठाभावीयसावच्छिन्नावच्छेदकत्वानिरूपि
तसमवायसम्बन्धावच्छिन्नप्रतियोगित्व विशिष्टसमवायस
म्बन्धावच्छिन्नवृत्तित्वं, प्रतियोगितायांसावच्छिन्नावच्छे
दकत्वानिरूपितत्वानिवेशे मूर्त्तत्वाधिकरणघटस्यस्वनिष्ठप
टवृत्तित्वविशिष्टमूर्त्तत्वाभावीय प्रतियोगित्वविशिष्टसमवाय
सम्बन्धावच्छिन्नवृत्तित्वसम्बन्धेनमूर्त्तत्वेसत्वेन परमतेउक्तस
म्बन्धेन स्वविशिष्टाधिकरणाप्रसिद्ध्योक्तानुमानेहेत्वसिद्धिः
स्या, दतस्तन्निवेशः, प्रतियोगितायां समवायसम्बन्धा

वच्छिन्नत्वानिवेशे मूर्त्तत्वाधिकरणघटस्यस्वनिष्ठसंयोगसम्ब
न्धावच्छिन्नप्रतियोगिताकमूर्त्तत्वाभावीयप्रतियोगित्व वि
शिष्टसमवायसम्बन्धावच्छिन्नवृत्तित्वसम्बन्धेन परमतेमूर्तत्वे
सत्वेनोक्तसम्बन्धेन स्वविशिष्टाधिकरणाप्रसिद्ध्योक्तानुमा
नेहेत्वसिद्धिःस्या, दतस्तन्निवेशः, समवायसम्बन्धावच्छि
न्नवृत्तित्वानिवेशे उक्तानुमानेमूर्तत्वप्रविष्टतावच्छेदकोक्त
धर्म्माश्रयघटभेदेपटस्य स्वनिष्ठाभावीयतादृशप्रतियोगित्व
सम्बन्धेनसत्वेनोक्तसम्बन्धेनस्वविशिष्टाधिकरणाप्रसिद्ध्या
स्वमतेहेत्वसिद्धिः स्यादतस्तन्निवेशः, । द्वितीयवैशिष्ट्य
ञ्चस्वाभाववत्वसम्बन्धेन, अभावीयप्रतितावच्छेदकसम्ब
न्धश्च स्वनिष्ठाभावीयसमवायसम्बन्धावच्छिन्नप्रतियोगि
त्वाविशिष्टसमवायसम्बन्धावच्छिन्नवृत्तित्वं, प्रतियोगिता
यां सावच्छिन्नावच्छेदकत्वानिरूपितत्वानिवेशेमूर्त्तत्वाधि
करणघटस्यस्वनिष्ठपटवृत्तित्व विशिष्टभूतत्वाभावप्रतियोगि
त्व विशिष्टसमवायसम्बन्धावच्छिन्नवृत्तित्वसम्बन्धेनपर
मते भूतत्वेसत्वेनोक्तसम्बन्धेनस्वविशिष्टाधिकरणविशिष्ट
त्वाभावादुक्तानुमानेपरमतेस्वरूपासिद्धिः स्यादतस्तन्निवेशः,
प्रतियोगितायां समवायसम्बन्धावच्छिन्नत्वा निवेशेमूर्तत्वा
धिकरणघटस्यस्वनिष्ठसंयोग सम्बन्धावच्छिन्नप्रतियोगि
ताकभूतत्वाभावप्रतियोगित्व विशिष्टसमवायसम्बन्धावच्
छिन्नवृत्तित्व सम्बन्धेनभूतत्वेसत्वेनोक्तसम्बन्धेनस्वविशि
ष्टाधिकरणविशिष्टत्वा भावादुक्तानुमानेपरमतेस्वरूपासिद्धिः
स्यादतस्तन्निवेशः, समवायसम्बन्धावच्छिन्नवृत्तित्वानिवे

शेमूर्त्तत्वाधिकरणपटस्य स्वनिष्ठाभावीयतादृशप्रतियोगित्व सम्बन्धेनोक्तपक्षतावच्छेदकाश्रयघटभेदसत्वेनोक्तसम्बन्धेन स्वविशिष्टाधिकरणविशिष्टत्वाभावादुक्तानुमानेस्वमतेस्वरूपा सिद्धिः स्यादतस्तन्निवेशः, ॥ पृथिवीत्वेघटजलगताद्वित्वनिरू पितसाङ्कर्य्यवारणायचतुर्थसम्बन्धनिवेशः, तत्रस्वनिष्ठा भावीयप्रतियोगिता स्ववृत्तिजातित्ववत्वसम्बन्धावच्छिन्ना बोध्या, प्रतियोगितानिष्ठाप्रतियोगिताच स्वसमानाधिकर णजातित्वसम्बन्धावच्छिन्नाबोध्या, प्रतियोगितायांस्ववृत्ति जातित्वसम्बन्धावच्छिन्नत्वानिवेशेमूर्त्तत्वनिष्ठाभावीय स्वरू पसम्बन्धावच्छिन्नभूतत्वनिष्ठप्रतियोगितायाः स्वसमानाधि करणजातित्वसम्बन्धेन परमतेभूतत्वेसत्वेनतादृशप्रतियोगि त्वाभावविरहादुक्तानुमानेपरमते स्वरूपासिद्धिरतस्तन्निवे शः, प्रतियोगितानिष्ठप्रतियोगितायां स्वसमानाधिकरण जातित्व सम्बन्धावच्छिन्नत्वानिवेशे उक्तानुमानेस्वमतेमूर्तत्व निष्ठाभावीय स्ववृत्तिजातित्वरूपव्यधिकरणसम्बन्धावच्छि न्नभूतत्वनिष्ठप्रतियोगितायाः स्वरूपेणभूतत्वेसत्वेन तादृ शप्रतियोगित्वाभावविरहात्स्वरूपासिद्धिरतस्तन्निवेशः , मूर्तत्वनिष्ठाभावीय स्ववृत्तिजातित्वरूपव्यधिकरणसम्बन्धा वच्छिन्नघटानिष्ठप्रतियोगितायाजातित्ववादिमतेस्वसमानका लीनजातित्वसम्बन्धेनभूतत्वेसत्वेनतत्सम्बन्धेनतादृशप्रतियो गित्वाभावविरहादुक्तानुमानेपरमतेस्वरूपासिद्धिरतः स्वस मानकालीनत्वंपरित्यज्य स्वसमानाधिकरणत्वं जातित्वे निवेशितं, अथस्वत्वस्याननुगतत्वाद्स्यकेनरूपेणसंसर्गता, न

तावत्वृत्तितावदभावीयतादृशसम्बन्धावच्छिन्नप्रतियोगिता तात्वावच्छिन्नतादृशसम्बन्धावच्छिन्नप्रतियोगिताकसामान्या भावत्वेन, अन्यथाघटनिरूपितवृत्तितावदभावीय स्ववृत्ति जातित्वसम्बन्धावच्छिन्नभूतत्वनिष्ठप्रतियोगितायाःपरमते स्वसमानाधिकरणजातित्व सम्बन्धेनभूतत्वेसत्वेनतादृशप्रति योगितासामान्याभावविरहादुक्तानुमानेपरमते स्वरूपासि द्धिः स्यात्, नापिवृत्तितावदभावीयतादृशसम्बन्धावच्छिन्न प्रतियोगितानिष्ठतादृससम्बन्धावच्छिन्नप्रतियोगिताकाभा वत्वेन, अन्यथाघटजलगतद्वित्वनिरूपितवृत्तितावदभावी य स्वनिष्ठजातित्वरूपव्यधिकरणसम्बन्धावच्छिन्नघटनिष्ठ प्रतियोगितानिष्ठस्वसमानाधिकरणजातित्व रूपव्यधिकरण सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य पृथिवीत्वेसत्त्वेनघ टजलगतद्वित्वनिरूपितसाङ्कर्य्यस्या, दितिचेन्न उभयावृ त्तिधर्म्मनिष्ठावच्छेदकतानिरूपिताश्रयानिष्ठावच्छेदकतानि रूपितवृत्तितात्वनिष्ठावच्छेदकता निरूपितवृत्तितानिष्ठाव च्छेदकतानिरूपितायास्ववृत्तिजातित्व सम्बन्धावच्छिन्नप्र तियोगितानिष्ठस्वसमानाधिकरणजातित्व सम्बन्धावच्छि न्नप्रतियोगितातन्निरूपकाभावत्वेनसंसर्गता, मूर्तत्वरूपत द्व्यक्तिनिरूपितवृत्तितावदभावीयप्रतियोगित्वन्नास्तीत्यभा वमादायभूतत्वेहेतुसिद्धिः, नचमूर्तत्वजातित्वाभाववादिमते मूर्तत्वनिष्ठाभावीयस्ववृत्तिजातित्व सम्बन्धावच्छिन्नप्रतियो गितायाःकेवलान्वयितयातादृशप्रतियोगितावच्छेदकत्वं ला घवात् केवलप्रतियोगितात्वस्यैवेति मूर्तत्वरूपतद्व्यक्तिनिरू

पितवृत्तितावदभावीय स्ववृत्तिजातित्वसम्बन्धावच्छिन्नप्रति योगितात्वावच्छिन्नप्रतियोगित्वा प्रसिद्ध्योक्तानुमानेस्वरू पासिद्धिरितिवाच्य मुभयावृत्तिधर्म्मनिष्ठावच्छेदकतानिरू पिताश्रयनिष्ठावच्छेदकतानिरूपितवृत्तितात्वनिष्ठावच्छेद कतानिरूपितवृत्तितानिष्ठावच्छेदकता निरूपिताभावत्व निष्ठावच्छेदकता निरूपिताभावनिष्ठावच्छेदकताभिन्नप्र तियोगितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वा निरूपि तायास्ववृत्तिजातित्व सम्बन्धावच्छिन्नप्रतियोगितानिष्ठ स्वसमानाधिकरणजातित्व सम्बन्धावच्छिन्नाप्रतियोगिता, तन्निरूपकाभावत्वेनैवसंसर्गत्वान्नकोपिदोषः, । वृत्त्यनिया मकसम्बन्धस्यच प्रतियोगितावच्छेदकत्वमावश्यक, मन्यथाग गनंनगगनपरममहत्परिमाणादितिवाक्यस्यप्रामाण्यंनस्यात् , तथाहिगगनपरममहत्परिमाणस्यनकस्यापि जनकत्वमितित न्निरूपितजन्यत्वा प्रसिद्ध्यातदभावस्यगगनेबोधयितुमशक्य त्वात्, प्रतियोगितावच्छेदकत्वस्वीकारेचजन्यत्वसंसर्गवच्छि न्नप्रतियोगिताकगगनपरममहत्परिमाणाभावस्य गगनेबोध नसम्भवान्नतद्वाक्यस्य प्रामाण्यानुपपत्तिः, । एवंपक्षीवृक्षं गच्छति,नाभाव,मितिवाक्यस्यप्रामाण्यानुरोधेन वृत्त्यनिया मकसम्बन्धस्य प्रतियोगितावच्छेदकत्वंस्वीकरणीय, मन्यथा ऽभावनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वा प्रसिद्ध्या तद्वाक्यजन्यबोधासम्भवेनतद्वाक्यस्य प्रामाण्यंनस्यात्, प्रति योगितावच्छेदकत्वस्वीकारेच निरूपितत्वसम्बन्धावच्छि न्नप्रतियोगिताकाभावाभाववत्समवाय सम्बन्धावच्छिन्न

वृत्तितावत्संयोगजनकक्रियानुकूलकृतिमान्पक्षी, त्याकारकबोधसम्भवान्नतद्वाक्यस्य प्रामाण्यानुपपत्ति,रिति ॥ अथ भूतत्वंनजातिः मूर्तत्वनिरूपितसाङ्कर्य्यादित्यनुमानेभूतत्वस्य केनरूपेणपक्षता, नतावत्भूतभिन्नासमवेतत्वेसतिसकलभूतसमवेतत्वेन, स्वमतेतादृशपक्षतावच्छेदकस्याप्रसिद्धत्वात्, नापिभूतेतरासमवेतत्वेन, घटत्वादावंशतोवाधात्, स्वरूपासिद्धेश्च, पक्षतावच्छेदकसामानाधिकरण्येनसाध्यसिद्धेरुद्देश्यत्वे घटभेदान्तर्भावेणसिद्धसाधनंस्यात्, समवेतत्वस्यपक्षतावच्छेदककुक्षावन्तर्भावेपिरूपान्तर्भावेणतद्दुर्वारमेव, भूतपदशक्यतावच्छेदकत्वेनापिनपक्षता, स्वमतेवहिरिन्द्रियग्राह्यविशेषगुणस्यैवभूतपदशक्यतावच्छेदकत्वेन तत्रोक्तहेतुविरहात्, स्वरूपासिद्धिः स्यात्, भूतपदस्यनानार्थकतयागणविशेषवृत्तिवैजात्यस्यापिभूतपदशक्यतावच्छेदकत्वमितितदन्तर्भावेणवाधस्वरूपासिद्धीच, पक्षतावच्छेदकसामानाधिकरण्येनसाध्यसिद्धेरुद्देश्यत्वे भूतपदशक्यतावच्छेदकप्राणित्वरूपोपाधौजातित्वाभावस्योभयवादिसिद्धत्वेनतदन्तर्भावेणसिद्धसाधनंस्यादितिचेन्न भूतेतरासमवेतत्वेसतिभूतनिष्ठभेदप्रतियोगितानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकत्वाभाववत्वेनपक्षता, तादृशपक्षतावच्छेदकश्चघटभेदेप्रसिद्धइति नस्वमतेपक्षतावच्छेदकाप्रसिद्धिः, व्यधिकरणसम्बन्धस्यप्रतियोगितावच्छेदकत्वावच्छेदकत्वानभ्युपगमेनसमवायेनघटभेदवान्नेतिप्रतीतिसिद्धसमवायसम्बन्धावच्छिन्न घटभेदनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकभेदस्याप्रसिद्धत्वादिति, ॥ अथवाभूतेतरासमवेतत्वेसति भूतनिष्ठभेदप्रतियोगितानिरूपितसामानाधि

करण्यसम्बन्धेनसमवेतत्व विशिष्टावच्छेदकत्वाभाववत्त्वमेव पक्षतावच्छेदक,मितिनस्वमतेपक्षतावच्छेदकाप्रसिद्धिः, तादृशपक्षतावच्छेदकस्यघटभेदेप्रसिद्धत्वादिति, । यद्वामनोवृत्तीतरत्वेसतिपृथिव्यादिपञ्चवृत्तिधर्म्मत्वेनपक्षता, पक्षतावच्छेदकश्चपृथिव्यादिपञ्चकान्यतमत्वेप्रसिद्धः । द्रव्यत्वान्तर्भावेणवाधस्वरूपासिद्धिवारणायसत्यन्तमिति, ॥ मूर्त्तत्वनिरूपितसाङ्कर्य्यादित्यत्रापिमूर्त्तत्वस्य नापकृष्टपरिमाणत्वेनप्रवेश, स्वन्निरूपितसाङ्कर्य्याप्रसिद्धेः, । किन्तु मूर्त्तेतरासमवेतत्वेसतिमूर्त्तनिष्ठभेद प्रतियोगितानिरूपितसमवायसम्बन्धावच्छिन्ना वच्छेदकत्वाभाववत्वेन, मूर्त्तेतरासमवेतत्वेसतिमूर्त्तनिष्ठभेद प्रतियोगितानिरूपितसामानाधिकरण्यसम्बन्धेनसमवेतत्वविशिष्टावच्छेदकत्वाभाववत्वेन, गगनावृत्तित्वेसति पृथिवीजलतेजोवायुमनोवृत्तिधर्म्मत्वेनवाप्रवेशः, तादृशपक्षतावच्छेदकश्चगगनभेदे पृथिव्यादिचतुष्टयमनोऽन्यतमत्वेवा, प्रसिद्धः, । अन्यतमत्व,ञ्च तत्तद्व्यक्तिभेदावच्छिन्नप्रतियोगिताकभेदरूप, मखण्डोपाधिरूपम्वे, त्यन्यदेतत्, अखण्डोपाधित्वञ्चस्वरूपसम्बन्धावच्छिन्नवृत्तित्वे सति, समवायभिन्नत्वे सति, भावत्व,मिति ॥ केचित्तु, जातिविशिष्टत्वमेवसाङ्कर्य्यं, वैशिष्ट्यञ्चसामानाधिकरण्यस्वाभावसामानाधिकरण्य स्वसामानाधिकरणात्यन्ताभावप्रतियोगित्वे तत्त्रितयसम्बन्धेन, भूतत्वमूर्त्तत्वोभयं नजातिरितिप्राचीनमतस्यायमभिप्रायः । तथाहिभूतत्वमूर्त्तत्वोभयत्वं जातित्वाभावसमानाधिकरणं वस्तुविशिष्टत्वात्, घटत्वनीलघटपटान्यतरत्वोभयत्ववदित्यनुमानेन तादृशोभयत्वे जा

तित्वाभावसामानाधिकरण्यसिद्धौ विनिगमनाविरहादुभय
त्वजातित्वाभावसिद्धिः। अविभुवृत्तिसंयोगेवैजात्यं स्वी
कृत्यताद्दशविजातीयसंयोगस्य क्रियाकारणत्वकल्पनयैवगग
नादौक्रियावारणसम्भवात्, समवायेनक्रियाम्प्रतितादात्म्ये
नमूर्त्तत्वेनकारणत्वस्यानङ्गीकारा,न्मूर्त्तत्वजातिसिद्धौविनिगम
कविरह इति,। तत्रवस्तुवैशिष्टयञ्चस्ववृत्तित्वस्वविशिष्टवृत्ति
त्वोभयसम्बन्धेन, वैशिष्ट्यञ्चस्वसामानाधिकरण्यव्याप्यत्व
व्यापकत्वान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्वो
भयसम्बन्धेन, स्वविशिष्टवृत्तित्व सम्बन्धेनपटतद्घटसंयोग
रूपवस्तुविशिष्टघटत्वत्वेव्यभिचारोऽतः स्ववृत्तित्वनिवेशः, स्व
वृत्तित्वसम्बन्धेनघटत्वरूपवस्तुविशिष्टघटत्वत्वेऽव्यभिचारोऽतः
स्वविशिष्टवृत्तित्वनिवेशः, स्वाभाववत्वसम्बन्धेनघटत्वविशिष्ट
पटत्ववृत्तावुक्तद्वयसम्बन्धेनघटत्वरूपवस्तु विशिष्टघटत्वपटत्वो
भयत्वेव्यभिचारोऽतःसामानाधिकरण्यनिवेशः, स्वसामाना
धिकरण्य सम्बन्धेनस्वविशिष्टघटत्ववृत्तित्वस्ववृत्तित्वद्वयसम्ब
न्धेनघटत्वरूपवस्तुविशिष्टघटत्वत्वेव्यभिरोऽतस्ताद्दशान्यतरस
म्बन्धावच्छिन्न प्रतियोगिताकस्वाभावनिवेशः, व्याप्यत्वस
म्बन्धावच्छिन्न प्रतियोगिताकस्वाभावसम्बन्धेनघटत्वविशि
ष्टपृथिवीत्ववृत्तावुक्तद्वयसम्बन्धेनघटत्वात्मकवस्तु विशिष्ट
घटत्वपृथिवीत्वोभयत्वेऽव्यभिचारः, व्यापकत्वसम्बन्धावच्छि
न्नप्रतियोगिताकस्वाभावसम्बन्धेनपृथिवीत्व विशिष्टघटत्ववृ
वृत्तावुक्तद्वयसम्बन्धेनपृथिवीत्वात्मकवस्तुविशिष्ट घटत्वपृथि
वीत्वोभयत्वेऽव्यभिचारो,ऽतस्ताद्दशान्यतरसम्बन्धावच्छिन्न प्र
तियोगिताकस्वाभावनिवेशः, ॥ अथवाभूतत्व मूर्त्तत्वोभय

त्वंजातित्वाभावसमानाधिकरणंवस्तुविशिष्टान्यत्वेसतिवस्तु विशिष्टत्वात्, घटत्ववदित्यनुमानेनभूतत्वमूर्त्तत्वोभयत्वेजाति त्वा भावसामानाधिकरण्यसिद्धौविनिगमनाविरहादुभयत्व जातित्वाभावसिद्धिः, घटत्वपृथिवीत्वोभयत्वेऽव्यभिचारोऽतः सत्यन्तम्, तत्रवैशिष्ट्यञ्चस्ववृत्तित्वस्वविशिष्टवृत्तित्वोभय सम्बन्धेन, वैशिष्टयञ्चस्वभिन्नत्वस्वव्यापकत्वोभवसम्ब न्धेन, स्ववृत्तित्वसम्बन्धेनमूर्त्तत्वरूपवस्तुविशिष्टताहशोभय त्वेस्वरूपासिद्धिरतः स्वविशिष्टवृत्तित्वनिवेशः, स्वविशिष्टवृ त्तित्वसम्बन्धेन पृथिवीत्वात्मकवस्तुविशिष्टेताहशोभयत्वेस्व रूपासिद्धिरतः स्ववृत्तित्वनिवेशः, व्यापकत्वसम्बन्धेनमूर्त त्वविशिष्टमूर्तत्ववृत्तिताहशोभयत्वे उक्तद्वयसम्बन्धेनमूर्तत्वात्म कवस्तुविशिष्टेस्वरूपासिद्धिरतः स्वभिन्नत्वनिवेशः, स्वभि न्नत्वसम्बन्धेनमूर्तत्वविशिष्टभूतत्ववृत्तिताहशोभयत्वे उक्तद्वय सम्बन्धेनमूर्त्तत्वात्मकवस्तुविशिष्टेस्वरूपासिद्धिरतः स्वव्याप कत्वनिवेशः, । घटत्वत्वेव्यभिचारवारणायवस्तुविशिष्टत्व निवेशः, तत्रवैशिष्ट्यञ्चस्ववृत्तित्वस्वविशिष्टवृत्तित्वोभयस म्बन्धेन, सम्बन्धघटकवैशिष्ट्यञ्चस्वभिन्नत्वस्वसामानाधिक रण्योभयसम्बन्धेन, स्वविशिष्टवृत्तित्वसम्बन्धेन पृथिवीत्वा त्मकवस्तुविशिष्टघटत्वत्वेव्यभिचारोऽतः स्ववृत्तित्वनिवेशः, स्ववृत्तित्वसम्बन्धेन घटत्वात्मकवस्तुविशिष्टघटत्वत्वेव्यभिचा रोऽतः स्वविशिष्टवृत्तित्वनिवेशः, सामानाधिकरण्यसम्ब न्धेन घटत्वविशिष्टघटत्ववृत्तिघटत्वत्वेउक्तद्वयसम्बन्धेनघट त्वात्मकवस्तुविशिष्टव्यभिचारोऽतः स्वभिन्नत्वनिवेशः, स्व भिन्नत्वसम्बन्धेन घटत्वविशिष्टपटत्ववृत्तिघटत्वपटत्वोभयत्वे

उक्तद्वयसम्बन्धेन घटत्वात्मकवस्तुविशिष्टेऽव्यभिचारोऽतः स्व सामानाधिकरण्यनिवेशः, इत्याहुः॥ अनवस्थितिरिति, सा चजातेर्जातिमत्त्वेबाधिका, तत्रसामान्यत्वंजातिः सामान्यत्व त्वंजातिरित्यादिरीत्याऽनवस्थानसम्भवति, सामान्यत्वस्यैक मात्रवृत्तित्वेनैवजातित्वबाधात्, किन्तुघटत्ववृत्तिजातित्वस्यजा तित्वेघटत्वतद्वृत्तिजातित्वोभयवृत्तिजातित्वं, पुनस्तस्यजा तित्वेघटत्वतद्वृत्ति जातित्वतादृशोभयवृत्तिजातित्वैतात्रितय वृत्तिजातित्वं,स्वीकरणीय,मितिरीत्यासाबोध्या, सामान्यत्वं यदिसामान्यंस्यात्तदासामान्यवृत्तिनस्यात्, घटत्ववत्, यतोन सामान्यवृत्तित्वाभाववदतोनसामान्यमितिरीत्यासामान्यत्वे सामान्यभेदसिद्धिरिति,॥ रूपहानिरिति, साचविशेषस्यजा तिमत्त्वेबाधिका, विशेषत्वजातिस्वीकारे, रूपस्य, जातिभिन्न त्वेसतिजातिरहितत्वेसतिसमवेतत्वरूपस्य विशेषलक्षणस्य, हानिःस्यादितिभावः, अथवारूपस्य, स्वतोव्यावर्त्तकत्वस्य, व्याघात, इत्यर्थः, अयंभावःस्वमतेतद्व्यक्तित्वेनैवविशेषस्य परमाणौपरमाण्वन्तरभेदसाधनेहेतुत्वं, तन्निष्ठतद्व्यक्तित्वञ्च तादात्म्येनसैवव्यक्ति, रन्यस्यदुर्वचत्वा, दितिस्वेनरूपेण भेदानुमापकतानिराबाधा, विशेषत्वजातिस्वीकारेतुतेनरू पेणैवहेतुत्वंवाच्यं जातिमन्निष्ठव्यावर्त्तकतायाजात्यवच्छि न्नत्वनियमात्, तथाचव्यभिचारःस्यात्, तत्ताविशिष्टविशेष त्वस्यचहेतुतावच्छेदकत्वंनसम्भवति तत्तारूपसमानाधिकर णव्याप्यतावच्छेदकधर्मान्तरघटितत्वादिति ॥ असम्ब न्धइति, समवायाभावयोर्जातिमत्त्वेप्रतियोगितानुयोगितान्य तरसम्बन्धावच्छिन्न प्रतियोगिताकसमवायाभावोबाधकइ

त्यर्थः, नचसमवायत्वाभावत्वजातिमतेऽनुयोगितयासमवाय स्यसमवायादासत्वात्कथंतदितिवाच्यं समवायपदेनजातिभिन्नप्रतियोगिकत्वविशिष्टसमवायस्यविवक्षितत्वात्, अनुयोगितासम्बन्धावच्छिन्नप्रतियोगिताकतादृशसमवायाभाववति रूपादौव्यभिचारवारणाय प्रतियोगित्वंनिवेशितं, प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकतादृश समवायाभाववतिगगनेव्यभिचारवारणानुयोगित्वं निवेशितं, । समवाय पदं जातिप्रतियोगिकसमवायेतरसमवायपर, मितितुनसत्, समवायस्यैकतयातदप्रसिद्धेः, नचैवंसामान्यत्वजातिमतेपि तादृशान्यतरसम्बन्धावच्छिन्न प्रतियोगिताकतादृशसमवायाभावस्य सामान्येसत्वेनतत्रजातिमत्वबाधकत्वसम्भवादनवस्थायास्तत्व्यर्थामितिवाच्यं जातिभिन्नेत्यत्रजातिपदमसमवेतवृत्तिजातिपर, मितिसामान्यत्वस्यासमवेतवृत्तित्वाभावेनतादृशाभावस्यसामान्येविरहात्तस्यावश्यकत्वं, नचासमवेतवृत्तीतिव्यर्थामितिवाच्यमखण्डाभावघटकतयातत्सार्थक्यादिति,॥ वस्तुतस्तुसमवेतवृत्त्यनुयोगितासम्बन्धावच्छिन्न प्रतियोगिताकसमवायाभावस्य जातिमत्वबाधकत्वमितितदर्थः, समवायत्वाभावत्वजातिमतेपिसमवायाभावनिष्ठानुयोगितायाः समवेतावृत्तित्वेन तादृशानुयोगितासम्बन्धावच्छिन्नसमवायाभावस्यतत्रसत्वात्, तस्यतत्रजातिमत्वबाधकत्वमुपपन्नमिति ॥ इति गङ्गौलिग्रामनिवासिमैथिल श्रोत्रिय नैयायिकोपाध्यायोपनामक श्रीलोकनाथशर्म्मकृत जातिबाधकपरिष्कारः॥ समाप्तः॥

करकरेभनिशेश युते शकेऽश्विनसिते चतुराननसत्तिथौ ।
विधुसुतस्य दिन परिपूर्णतां गतमिदं गिरिजापतिपत्तने ॥

# जातिलक्षण परिष्कारः ।

अथसामान्यंनिरूप्यते, तल्लक्षणञ्चनित्यत्वेसत्यनेकसमवेतत्वम् । संयोगादिवारणायसत्यन्तम्, नित्यत्वञ्चध्वंसाप्रतियोगित्वेसतिप्रागभावाप्रतियोगित्वम्, गगनपरिमाणादिवारणायानेकसमवेतत्वमिति, घटभेदादिवारणायद्वृत्तित्वसामान्यमपहायसमवायसम्बन्धावच्छिन्नवृत्तित्वरूपसमवेतत्वमुक्तं, तच्चवस्तुविशिष्टत्वं, वैशिष्ट्यञ्चस्वसमवेतत्वस्वाभिन्नसमवेतत्वोभयसम्बन्धेन, विभुद्वयसंयोगस्वीकर्तृमतेतद्वारणायसंयोगभिन्नत्वेसतीत्यपिलक्षणेनिवेश्यमिति ॥ यद्वासमवेतरहितत्वेसतिवस्तुविशिष्टत्वं, समवायाभाववत्त्वेसति वस्तुविशिष्टत्वम्वा, तल्लक्षणं, वैशिष्ट्यञ्चोक्तद्वयसम्बन्धेनेति, ॥ यद्वासत्ताव्यापकतावच्छेदकपदार्थविभाजकोपाधिमत्वंतत्, व्यापकताचसमवायेनेति, ॥ यद्वाआनत्यावृत्त्यनित्यसमवेतवृत्तिधर्म्मवत्वन्तत्, द्रव्यत्वमादायातिव्याप्तिवारणायावृत्यन्तं, विशेषत्वमादायातिव्याप्तिवारणायवृत्यन्त, मिति, ॥ सामान्यञ्चत्रिविधंपरा, पर, परापर, भेदात्, तत्रपरलक्षणमपरलक्षणञ्चजातिविशिष्टान्यजातित्वं, परलक्षणेवैशिष्ट्यञ्च स्वाभिन्नत्वस्वव्याप्यत्वोभयसम्बन्धेनेति, अपरलक्षणेचस्वाभिन्नत्वस्वव्यापकत्वद्वयसम्बन्धेन ॥ परापरलक्षणञ्चजातिविशिष्टत्वं, वैशिष्ट्यञ्चस्वतादात्म्यस्वभिन्नजातिव्याप्यत्व स्वभिन्नजातिव्यापकत्वैतत्त्रितयसम्बन्धेनेति, ॥ परंसत्ता, अपरंघटत्वं, परापरंपृथिवीत्वादिकमिति ॥ इति गङ्गौलीग्रामनिवासि श्रीलोकनाथशर्म्मकृत जातिलक्षणपरिष्कारः ॥ समाप्तः ॥